आनर्घमाणीकृशरापमध्यादार्तेन (?) कार्तस्वरदर्विकायाम् ।
भैक्षेण. दाक्षायणि पावनेन मनोरथं पूरय मामकीनम् ॥ ९८ ॥
संतन्वतेव स्वमणीकलम्पटे····षूपदेशात्कृशतानुयोगात् ।
हस्तेन कात्यायनि हन्त कामं विश्राणय श्रान्तिविनोदनं मे ॥ ९९ ॥
हैयङ्गवीनद्युतिशालिहस्तनखंपचं नव्यसितानमार्घम् ।
करस्फुरत्काञ्चनभाजनात्ते भवानि दिव्यं दिश पायसान्नम् ॥ १०० ॥
दृशोऽनुकम्पारसदीर्घिकाया नीलारविन्दैरिव निर्जहानैः (?) ।
अपाङ्गपातैरनुगृह्य मातरामोदयान्नैरिममन्नपूर्णे ॥ १०१ ॥
श्रान्तः क्षुधा सायमहर्मुखे वात्यन्नं दिश द्वारमुपैमि यावत् ।
शिञ्जानमञ्जीरपदं समेत्य प्रयच्छ मे पार्वति तावदन्नम् ॥ १०२ ॥
आविष्कृतप्रार्थनमप्यकाले वीतक्षुधं मां गिरिजे विधेहि ।
प्रतीक्षते किं पृथुको जनन्याः स्तन्यामृतासारसमृद्धिवेलाम् ॥ १०३ ॥
अवश्यकर्तव्यतयानुवेलं महान्ति कर्माणि सदा दिशन्ति ।
पर्याप्तमम्ब प्रतिपादयान्नं कर्तुं न किंचित्क्षमते बुभुक्षुः ॥ १०४ ॥
नित्यान्नदे मे निजमूर्तिभारमचिन्तयित्वाशनमर्पयेथाः ।
आदाय दर्वीं क्वचिदासिकायै जगज्जनन्याः समयः कुतस्ते ॥ १०५ ॥
दूरे क्षिपन्ती गुणदोषचिन्तामिष्टाशनैरेधय मामनव्यम् ।
निजे तनूजे किल निर्गुणेऽपि व्यनक्ति वात्सल्यभरं सवित्री ॥ १०६ ॥
अन्नार्थिनं मां यदि चेद्धुनोषि कृपापराची गणये किमन्यत् ।
........................................................................ ॥ १०७ ॥

दर्वीपायसभाजने कलयता युग्मेन हस्ताब्जयो-
रप्रत्यूहविभावितत्रिजगतीभिक्षाकनेत्रोत्सवां ।
वाचालाभरणं महानसगृहादन्नोपहारेच्छया
निर्यान्ती परदेवता मम मुहुश्चिन्तापथं गाहताम् ॥ १०८ ॥

स्तन्यास्वादकृते निरुध्य पुरतः संतन्वते प्रार्थनां
सेनान्ये सति पूर्वकायमसकृत् स्थित्या दिशन्ती स्तनौ ।
अस्तस्वेदपयःकणां(णा)प्रणयिनो हस्तेन वक्त्रादुमां(मा)
मृष्टान्नार्पणमर्थिनां विदधती(ती)मेधा महा(या)लम्ब(म्ब्य)ते॥१०९
स्मेरस्मेरमलीकचित्रकपरामर्शी श्रमाम्बोर्लवं
दिव्यास्ते व्यजनानिलाद्धरचलोत्तंसं दधाना मुखम् (?) ।
चेतो मे न जहातु सा भगवती कृत्वातिथेयीं कृपा-
माशी[राशि]परा गिरीशवसतिं प्रत्याव्रजन्ती जनैः ॥ ११० ॥
दृढभक्तितरङ्गितक्रमामथ मश्यन्नधिकालि देवताः ।
अविगाढपरं मनोगिरामधितानन्दममन्दमास्तिकः ॥ १११ ॥
आर्यश्चक्रसरोवगाहनियमैरश्रान्तयात्राक्रमै-
रस्माकं द्विजनौहितीविरचनैरावश्यकैरध्वरैः ।
विद्याव्याकरणैश्च शिष्यसदसे विश्वेशमाराधयन्
वाधूलान्वयमौलिरावसदसौ वाराणसीमृद्धिमान् ॥ ११२ ॥
प्रालेयाद्रिसुतासहायभजनप्रेमानुबन्धस्पृशे
विद्याशीलविनीत·········पो विश्राणनासङ्गिने ।
स्त्रैणपराङ्मुखाय····करुणामूर्तिं····संबिभ्रते
मूर्ध्ना संनतिमग्रजाय महते मोदान्मुहुः कुर्महे ॥ ११३ ॥

इति श्रीवाधूलकुलजलधिकौस्तुभस्यातिरात्रयाजिनः साहित्यगुरोः कनकाठपाठबिरुदाङ्कस्य वेङ्कटेशसुमतिसहधर्मिणीमण्यनन्तम्मागर्भशुक्तिमुक्तामणेः समरपुङ्गवदीक्षितस्य कृतौ चम्पूकाव्ये यात्राप्रबन्धे परिपूर्तिशोभितविलासो नाम नवम आश्वासः ॥

वीतस्पृहाय विरजस्तमसे समस्तशास्त्र[श्रुति]स्मृतिविदे समदर्शनाय ।
सिद्धाशिषे भगवदङ्घ्रिसमस्तभक्तिसान्द्रप्रसन्नमनसे सदसे नमोऽस्तु ॥

समाप्तोऽयं ग्रन्थः ।